यथा —

पुरा शरीरमन्तको भिनत्ति रोगसायकः ।
प्रसह्य जीवितक्षये शुभं महत् समाचरेत् ॥

बृहती ॥ २३ ॥

बृहती नाम षट्त्रिंशदक्षरं छन्दोऽधिकृतम् ।

भुजङ्गशिशुसृता नौ ॥ २४ ॥

(जयनरवरण्, नूनंसाग् )

यथा —

मणिहरितफलाश्चूताः ककुभसुरभयो वाताः ।
विकसितकमला वाप्यो द्रुतमभिपतितो ग्रीष्मः ॥

मणिमध्यं तुल् ॥ २५ ॥

(सातवत्, नूनंसाग्, कुरुतेल् )

यथा —

व्यायतने सम्प्रेक्ष्य शिवं पूर्णशशाङ्कः प्रीतमनाः ।
चारुतरं ते वक्त्रमिदं भामिनि लीनस्तोयधरे ॥

पङ्क्तिः ॥ २६ ॥

पङ्क्तिर्नाम चत्वारिंशदक्षरं छन्दोऽधिकृतम् ।

शुद्धविराड् सापी ॥ २७ ॥

(गङ्गास्, सातवत्, चन्द्रप्, धीवराश्)

यथा —

मध्याह्नार्कयुगोपमेक्षणा
दीप्तात्युज्ज्वलशूलधारिणी ।
क्रुद्धा सुम्भनिसुम्भसूदिनी
त्वच्छत्रूनभिहन्तु कौशिकी ॥

पणला ग्दू ॥ २८ ॥

(नूनंसाग्, नचरतिद्, नूनंसाग्)

यथा —

निःशङ्को भव खल! का तेऽहं
सम्बन्धे सति तु भवेत्कोपः ।
यस्याः स्यात्त्वयि खलु सम्बन्धः
तस्याः स्यात्प्रणयवशात्कोपः ॥

उपस्थिता प्लुरी ॥ २९ ॥

(गङ्गास्, कुरुतेल्, नतुर्, धीवराद्)

यथा —

ज्योत्स्नाप्रसराधिकपाण्डरै-
रापीतकरः कुमुदाकरैः ।
आवेदयतीव गताम्बुदां
चन्द्रः शरदं समुपस्थितः ॥

रुग्मवती ञ्नौ ॥ २० ॥

(रौतिमयूरोञ्, रौतिमयूरोञ् )

यथा —

स्तोकधनानां सम्प्रति यूनां
शोकनिदानो वाति च वायुः ।
पाटलगन्धी नित्यमनोज्ञः
कोकिलसङ्घानां मदहेतुः ॥

मयूरसारिण्यी शिष् ॥ २१ ॥

(धीवराश्, विभातिक्, लोलमालाष् )

यथा —

सक्थिरोमदन्तकेशसूक्ष्मां
पाणिपादतालुवक्त्रताम्राम् ।
तां मयूरसारिणीं तु कन्यां
यो लभेन्नरः स नन्दतीह ॥

विलासिता स्सद्स् ॥ २२ ॥

(गङ्गास्, गङ्गास्, नचरतिद्, गङ्गास् )

छत्राकारं यदि तु वराङ्गं
नेत्रे चोभे कमलदलाभे ।
वक्षः पीनं करचरणौ च
श्रीमच्चेयं विलसति तस्मिन् ॥

त्रिष्टुप् ॥ ३३ ॥

त्रिष्टुप् नाम चतुश्चत्वारिंशदक्षरं छन्दोऽधिकृतम् ।

इन्द्रवज्रा बेजृ ॥ ३४ ॥

(तेश्रीःक्वब्, तेश्रीःक्वब्, नदीज्, कृशाङ्गीङ्)

यथा —

भ्रूक्षेपमन्दैस्तनुभिस्तरङ्गैः
कादम्बपक्षैरवभिद्यमानैः ।
नद्यः शरत्सम्भृतसौकुमार्याः
कालेन बिद्या इव सम्प्रसेदुः ॥

उपेन्द्रवज्रा केजृ ॥ ३५ ॥

(विभातिक्, तेश्रीःक्वब्, नदीज्, कृशाङ्गीङ्)

यथा —

नताम्बुमांसीमलयोद्भवानां
न वारणानां .... .... .... ।
समांशयुक्तो मधुयोजितोऽयं
शुभाङ्गि धूपो रतिकेशपाशः ॥

उभयमिश्रेन्द्रमाला ॥ ३६ ॥

इन्द्रवज्रोपेन्द्रवज्राभ्यां मिश्रा इन्द्रमाला नाम वृत्तं भवति ।

सा चतुर्दशभेदा ॥ ३७ ॥

आख्यानिकाविपरीताख्यानिकाभ्यां सह अर्धसमवृत्ते द्वे व्युदस्यान्येषां द्वादशवृत्तानामुदाहरणानि वक्ष्यन्ते। यथा —

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

असम्भृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात्परं साथ वयः प्रपेदे ॥

सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धै-
रादित्सुभिर्नूपुरशिञ्जितानि ॥

केयासि कामिन् सहसापराद्धः
पादानतः कोपनयावधूतः ।
तस्यां करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम् ॥

पर्याप्तपुष्पस्तबकस्तनीभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः ।

१. 'क या' ग. पाठः.

लतावधूभ्यस्तरवोऽप्यवापु-
र्विनम्रशाखाभुजबन्धनानि ॥

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

[1]इयत्पृथुत्वं कृशदेहयष्टे-
र्नितम्बचक्रस्य परं प्रमाणम् ।
इतीव बद्धा रशनागुणेन
श्रोणी पुनर्वृद्धिनिषेधतोऽस्याः ॥

विविक्षुरन्तः सरसीनलक्ष्म्या-
मासाद्य हंसः समुदीक्ष्य वप्रम् ।
सस्मार नूनं दृढकौञ्चकुञ्ज-
भागच्छिदो भार्गवमार्गणस्य ॥

१. "तथाहृतं तस्य तया पृथुत्वं यथा भवन्मध्यमतिक्षयिष्णु ।
इतीव बद्ध्वा रशनागुणेन श्रोणी पुनर्वृद्धिनिषेधहेतोः ॥ "
इति मुद्रितपाठः । (जानकीहरणम् १-१०)

प्राकारमभ्रंलिहशृङ्गकोटि-
मपारमुल्लङ्घयितुं पुरस्तात् ।
यत्रारुणः संहृतवाहरश्मि-
स्तिर्यग्विधत्ते रथमुष्णधाम्नः ॥

आसीदयं चन्द्रमसो विशेष-
स्त्वद्वक्त्रचन्द्रस्य च भासुरस्य ।
बभार[1] पूर्वः सकलङ्कमङ्गं
तस्यैव नेत्रद्वितयं द्वितीयः ॥

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥

सङ्ग्रहश्लोकः —

अर्धेन मिश्राः षट् भेदाः पादेनाष्टौ द्वयोः क्रमात्
इन्द्रमालाविभागेन सर्वास्तास्तु चतुर्दश ॥

दोधकं ताञ् ॥ ३८ ॥

(सातवत्, सातबत्, रौतिमयूरोञ् )

१. "बिभर्ति पूर्वः सकलं कुरङ्गं" इति मुद्रितपाठः
(जानकीहरणम् १-१७.)

यथा —

यानि[1] वहन्त्यतिवर्षहतानि
व्याकुलकेसरपर्णमधूनि ।
षट्चरणा अपि तानि विसृज्य
स्फीतमधूनि न यानि विशन्ति ॥

शालिनी गेस्त्र नी ॥ ३९ ॥

(नूनंसाग् , तेश्रीःकब् , गङ्गास् , कृशाङ्गीङ्)

यथा —

स्निग्धच्छाया सुप्रसन्नायताक्षी
पीनश्रोणी दक्षिणावर्तनाभिः ।
संक्षिप्तांसा नातिरोमा नताङ्गी
कन्या धन्या नन्दिनी बान्धवानाम् ॥

वातोर्मिमाला गास्त्र नी ॥ ४० ॥

(नूनंसाग् , सातवत , गङ्गास् , कृशाङ्गीङ्)

यथा —

हस्ते वक्रं परुषा भीरु! केशा
वासः क्लिष्टं मलिनं तेऽद्य गात्रम् ।
नेत्रे शुक्ले त्वधरो रागहीनः
चिन्ताशून्यं हृदयं मां दहन्ति ॥

१. 'नि भवन्त्य' ग.

भ्रमरविलसिता गारु नी ॥ ४१ ॥

(नूनंसाग् , सातवत्, ननुर् , कुरुतेल्)

यथा —

मुक्ताः केशाः प्रविरलकुसुमाः
कर्णासक्तं कुवलयमसितम् ।
वासश्चैकं शशरुधिरनिभं
वेषस्तेऽयं मृगयति रमणम् ॥

रथोद्धता रनौ ॥ ४२ ॥

(धीवराश् , तरतिम्, धैर्यमस्तुतेट्)

यथा —

व्योममध्यगतदीप्तमण्डलः
प्रस्फुरत्करविकीर्णमण्डलः ।
गां दिधक्षुरिव चोग्रमण्डलः
साम्प्रतं रविरुदीर्णमण्डलः ॥

स्वागता रनौ ॥ ४३ ॥

(धीवराश् , तरतिम् , रौतिमयूरोत्र् )

यथा —

स्निग्धदन्तमसितायतनेत्रं
चारुपीनशुकतुण्डनिभोष्ठम् ।
वक्त्रमेतदसितं विनतभ्रु
प्रेक्ष्य को हि मनुजः स्ववशः स्यात् ॥

वृत्ताङ्गी णुस् ॥ ४४ ॥

(जयनरवरण् , कुरुतेल् , गाङ्गस्)

यथा —

शयनमृदितवपुरुत्सूर्ये
चपलहृदय! किमसि प्राप्तः ।
प्रसर लघुतरमयं जात-
स्तव च मम च न कथा युक्ता ॥

श्येनी शिट् ॥ ४५ ॥

(धीवराश् , विभातिक्, धैर्यमस्तुतेट् )

यथा —

गम्यतां यथेष्टमेष तेऽञ्जलि-
स्त्वां चिकित्सितुं कुतो मनोरथः ।
तस्य ते गृहीतरोषया मया
पादताडितस्य दौत्यमागतम् ॥

सङ्गता कुजी ॥ ४६ ॥

(विभातिक् , कुरुतेल् , नदीज् , धीवराश् )

यथा —

मही हरितशाड्वलैरावृता
घनैरुरुभिराकुलाः पर्वताः ।
जलौघहततीरजाः सिन्धवः
प्रिये! घनसमागमो वर्त्तते ॥

जगती ॥ ४७ ॥

जगती नामाष्टचत्वारिंशदक्षरं छन्दोऽधिकृतम् ।

वंशस्थं केकी ॥ ४८ ॥

(विभातिक्, तेश्रीःक्वब्, विभातिक्, धीवराश्)

यथा —

तवास्य नीलोत्पलपत्रचक्षुषो
मुखस्य तद्रेणुसमानगन्धिनः ।
प्रसन्नचन्द्रप्रियदर्शनस्य मा-
मदर्शनं भामिनि केर्शयिष्यति[1] ॥

इन्द्रवंशा बेकी ॥ ४९ ॥

(तेश्रीःकब्, तेश्रीःकब्, बिभातिक्, धीवराश्)

यथा —

लुब्धाः शठा नैकृतिका गुणद्विषः
कामातुराः स्वार्थपरा दुरासदाः ।
वर्ज्या नराः सद्भिरुदीरिता हि ते
त्वपीन्द्रवंशप्रभवो गुणप्रियैः ॥

तोटकं[2] लुलु ॥ ५० ॥

(कुरुतेल्, कुरुतेल्, कुरुतेल्, कुरुतेल्)

1. 'दर्शयिष्यति' ख.
2. 'तोटकं' ख.

यथा —

ध्रुवमस्ति हि कन्दुक ! ते हृदयं
प्रमदास्तनसङ्गमलुब्ध इव[1] ।
वनिताकरतामरसाभिहतः
पतितः पतितः पुनरुत्पतसि ॥

पुटो णूङ् नृ ॥ ५१ ॥

(जयनरवरण् , नूनंसाग्, कृशाङ्गीङ् )

यथा —

उपवनसलिलानां बालपद्मैः
भ्रमरमधुकराणां कण्ठनादैः ।
मदनमदविलासैश्चाङ्गनानां
जनयति चतुरत्वं पुष्पमासः ॥

जलोद्धतगतिः कुकु नू ॥ ५२ ॥

(विभातिक्, कुरुतेल्, विभातिक् , कुरुतेल्)

यथा —

भ्रमन्ति हरिणास्तृषापरिगता
न[2] भान्ति गिरयोऽपि शुष्कतरवः ।
दवाग्न्युपगमैर्मषीकृततृणां
पुनर्दहति गां पटुर्दिनकरः ॥

१. 'धियः' क.
२. 'विभान्ति' क.

कुसुमविचित्रा मृमृ नू ॥ ५३ ॥

(तरतिम्, कृशाङ्गीङ्, तरतिम्, कृशाङ्गीङ् )

यथा —

खमिव सतारं कुसुमविकीर्णं
सलिलमगाधं शशिनिभवक्त्रम् ।
वियति शशाङ्कं विपुलतराक्षी
जलपिहिताङ्गी जयति तरन्ती ॥

भुजङ्गप्रयातं ङृङृ नू ॥ ५४ ॥

(कृशाङ्गीङ्, कृशाङ्गीङ्, कृशाङ्गीङ्, कृशाङ्गीङ्)

यथा —

प्रहृष्टो महेन्द्रः प्रनष्टो निदाघः
प्रविष्टोऽन्यपुष्टः प्रहृष्टा भुजङ्गाः ।
जलार्द्रा गिरीन्द्रा मदार्द्रा गजेन्द्राः
सदर्पा वृषेन्द्रा विवैरा नरेन्द्राः ॥

प्रतिमाक्षरा लिलु ॥ ५५ ॥

(कुरुतेल् , विभातिक्, कुरुतेल्, कुरुतेल् )

यथा —

मदमानमोहभुजंगीवलयं[1]
प्रशमाभिरामसुखविप्रलयम् ।
क ईवाश्रयेदभिमुखं[2] विलयं
बहुदुःखतीव्रनिलयं निलयम् ॥

१. 'जगाव' ख. ग.
२. 'इहाभ' क.

द्रुतविलम्बितं माती ॥ ५६ ॥

(तरतिम् , सातवत्, सातवत्, धीवराश् )

यथा —

उपगतापि करं परिवादिनी
न वदति श्रवणीयविवादिता ।
पुरुष एव हि वादयते प्रियां
परभृतीमिव चूतनवाङ्कुरः ॥

वैश्वदेवी गूजो नु ॥ ५७ ॥

(नूनंसाग् , नूनंसाग् , नदीज् , लोलमालाष् )

यथा —

वेगादायान्तीं वीक्ष्य केशान्तलीनां
पङ्क्तिं मुग्धानां कूजतां षट्पदानाम् ।
लम्बः सुन्दर्या किञ्चिदाकेकराक्ष्या
त्रासान्निष्कृष्य त्यज्यते कर्णपूरः ॥

नवमालिनी मितृ ॥ ५८ ॥

(तरातिम्, विभातिक् , सातवत् , कृशाङ्गीङ्)

यथा —

निपतितमाल्यमाकुलितकेशं
विरहितमत्तमण्डलकपोलम् ।

1. 'भृताम्' ब.

सखि ! विगतोष्ठरागमपनिद्रं
कथयति ते वपुः करविमर्दम् ॥

प्रमुदितवदना णौश्‌ ॥ ५९ ॥

(जयनरवरण्, धीवराश्, धीवराश्)

यथा —

अविदितविभवा क्षुधा व्याधयः
प्रतिदिनभयदा तथोग्रा जरा ।
अपरिमितजवो यमोऽप्यन्तरे
शुभमिह किममुत्र मित्रं विना ॥

सौदामिनी गाल्‌ नी ॥ ६० ॥

(नूनंसाग्, सातवत्, कुरुतेल्, नूनंसाग्)

यथा —

नागायन्ते मदजलधाराः शैलाः
शैलायन्ते दिशि दिशि नीला मेघाः ।
मेघायन्ते व्युपहतरूपास्तारा-
स्तारायन्ते दिशि दिशि सौदामिन्यः ॥

अतिजगती ॥ ६१ ॥

अतिजगती नाम द्विपञ्चाशदक्षरं छन्दः ।

प्रहर्षिणी गको नि ॥ ६२ ॥

(नूनंसाग्, तरातिम्, विभातिक्, लोलमालाष्)

यथा —

तन्मित्रं त्यजति विपत्सु यन्न मित्रं
तज्ज्ञानं प्रशमकरं यदिन्द्रियाणाम् ।
यः पैत्रीं धुरमवलम्बते स पुत्रः
सा भार्या पतिहृदयप्रहर्षिणी या ॥

रुचिरा क्त्रै नी ॥ ६३ ॥

(विभातिक्, सातवत्, ननुर्, धैर्यमस्तुतेट्)

यथा —

ततः शिवं कुसुमितबालपादपं
परिभ्रमत्प्रमुदितमत्तकोकिलम् ।
निपानवत्सकमलचारुदीर्घिकं
ददर्श तद्वनमिव नन्दनं वनम् ॥

मत्तमयूरो गेजौ ॥ ६४ ॥

(नूनंसाग्, तेश्रीःक्वब्, नदीज्, रौतिमयूरोश्)

यथा —

वातोद्धूतैः कोमलकैः पल्लवहस्तैः
पद्मौघानां संवरणं कर्तुमशक्ता ।
गन्धद्रव्यैः षट्पदचोरैः ह्रियमाणैः
कोकूयन्ते कोकिलनादैः सहकाराः ॥

नन्दिनी लिरै ॥ ६५ ॥

(कुरुतेल्, विभातिक्, ननुर्, धैर्यमस्तुतेट्)

१. 'विभातवत्' क. ग.
२. बुद्धचरित अ०.३. श्लो०. ६४.

यथा —

शयनोत्थितस्य शिवमादधातु ते
मकरालये तिमिविवर्तिताम्भसि ।
वपुरिन्द्रनीलमणिभङ्गसन्निभं
पुरुषस्य शेषशयनाधिशायिनः ॥

भद्रा गादू नी ॥ ६६ ॥
(नूनंसाग् , सातवत् , नचरतिद्, नूनंसाग् )

यथा—

इत्येवं द्वौ द्विषि समवयुतौ कृत्वा
पञ्चोपायैर्ग्रहणविधिरयं प्रोक्तः ।
अस्मादूर्ध्वं वशमुपनयितुं नागान्
कर्मस्कन्धेष्वय भृषिविहितो मार्गः ॥

शक्वरी ॥ ६७ ॥
शक्वरी नाम षट्पञ्चाशदक्षरं छन्दः ।

असम्बाधा सूणू नु ॥ ६८ ॥
(गङ्गास् , नूनंसाग् , जयनरवरण्, नूनंसाग् )

यथा—

हस्तावष्टब्धं मुखमिदमनलङ्कारं
सास्रे संरक्ते भ्रुकुटिविरहिते नेत्रे ।
स्वैरं चासीना प्रवदसि न च मा किञ्चिद्
भावः कस्तेऽयं सुतनु! मयि चिरप्राप्ते ॥

१. 'भद्रि' क.

अपराजिता ग्नौ रौ न्‍ ॥ ६९ ॥

(जयनरवरण् , धावराश् , ननुर् , धीवराश् )

यथा—

अनिभृतनयनं सविभ्रममाननं
कृशदशनपदं स्तनद्वयमुन्नतम् ।
प्रशिथिलरशनं महज्जघनं च ते
सुतनु ने किमलङ्करिष्यसि मण्डनम् ॥

प्रहरणगलिता द्नौ भ्नौ न्‍ ॥ ७० ॥

(नचरातिद् , कुरुतेल्, नचरातिद् , कुरुतेल्)

यथा—

अनिभृतरुदितं स्मितमिव हसवाग्
जलगुरुनयनं शुभवशागतवत ।
परिभवभवनं भवति च नियतं
यदुपहतमतिस्तदिदमिह घटे ॥

वसन्ततिलकम् ताजिज्ग् ॥ ७१ ॥

(तिश्रीःक्वव् , सातवत् , विभातिक् , विभातिक् ,
गङ्गास् )

यथा—

पश्य भ्रुवोर्गतिमिहाप्यनुसर्तुमिच्छ-
न्नेतद्विभाति नयनद्वयमायताक्ष्याः ।
श्रोणीपयोधरगतां गुरुतां च बिभ्र-
ज्जिज्ञासया तुलयतीव हि मध्यमस्याः ॥

१, क. ग. omit this word.

इन्दुमुखी सैतवस्य ॥ ७२ ॥

इदमेव वसन्ततिलकमिन्दुमुखी नाम वृत्तं भवति [1] सैतवस्याचार्यस्य मतेन ।

सिंहोन्नता काश्यपस्य ॥ ७३ ॥

इदमेव वसन्ततिलकं सिंहोन्नता नाम वृत्तं भवति काश्यपस्याचार्यस्य मतेन ।

विलासिनी तिलस् ॥ ७४ ॥

(सातवत, विभातिक्, कुरुतेल्, तरतिम्, गङ्गास्)

यथा--

कुञ्जरकरोद्धपभुजाननमनूनं
मन्दरशिलातलसमोरसमुदारम् ।
अञ्जननिभैकरुहकुञ्चितसुकेशं
तं जिनमहं जितकलिं सुगत मीडे ॥

अतिशक्वरी ॥ ७५ ॥

अतिशक्वरी नाम षष्ठ्यक्षरं छन्दः ।

चन्द्रावर्त्ता णणु ॥ ७६ ॥

(जयनरवरण्, जयनरवरण्, कुरुतल्)

यथा—

अतिरुचिरसममसितघनोचिकुरं
विकसितकमलदलरुचिमदधरम् ।
तव रुचिरमुखकमलमिदमसितं
जनयाति सुतनु ! मम मदनमतुलम् ॥

१. Mss. सैवतस्य.
२. Mss. omit 'चिकुर'
३. Mss. omit 'रुचिर'

माला नू सैव ॥ ७७ ॥

सैव चन्द्रावर्त्ता षष्ठेऽक्षरे यतिश्चेन्माला नाम वृत्तं भवति । यथा—

शशिनिभमुखि ! तव भवतु सह मया
कतकरुचिरतनु ! तनुरपि कलहः ।
तव च रमणि ! किमपरिचित इव मां
समसितदति परुषयति परिजनः ॥

मणिगुणनिकरो नृ ॥ ७८ ॥

सैव चन्द्रावर्त्ता अष्टमेऽक्षरे यतिर्भवति चेत् मणिगुणनिकरो नाम वृत्तं भवति । यथा—

कमलरुचिरमुखि ! गुणयसि सुभृशं
त्वमसि रमणि ! मयि सुशिथिलहृदयम् ।
कमलरुचिरतनु ! किमिदमसदृशं
विमलशिखरदति ! वद यदपकृतम् ॥

मालिनी णुङ् नृ ॥ ७९ ॥

(जयनरवरण्, नूनंसाग्, कृशाङ्गीङ्, कृशाङ्गीङ्)

यथा—

परभृतकुलनीलाः पर्वतोत्तुङ्गशृङ्गाः
स्फुरदुरुतरविद्युज्जङ्गपिङ्गाङ्गरागाः ।
पटहमधुरमन्द्रध्वानिनः सेन्द्रचापा
निखिलमनिलमार्गं नीरदाः छादयन्ति ॥

अष्टिः ॥ ८० ॥

अष्टिर्नाम चतुःषष्ट्यक्षरं छन्दः ।

ऋषभगजविलसिता तदिल् नृ ॥ ८१ ॥

सातवत् , धीवराश् , नचरातिद्, तरतिम् , कुरुतेल् )

यथा—

एष सरः प्रसन्नमनवरतखगरुतं
पद्मकृतोत्तरीयमुभयतटरुहवनम् ।
यूथपतिर्विहर्तुमभिपतति दिनकरो-
प्युद्धतपांसुरूक्षमपनयति गजकुलम् ॥

ललना पाणज्र् नृ ॥ ८२ ॥

(चन्द्रप् , सातवत् , जयनरवरण् , तरातिम् ॥
नदीज् )

यथा—

चारु भीरु ! निशितशुभसितसमदशनं
लोकलोचनहरमभिनवकमलनिभम् ।
भाति भामिनि ! तव कुवलयदलनयनं
सुनसुभ्रु वदनमतिशुभमिदममलम् ।

चन्द्रलेखा दीमीश् ॥ ८३ ॥

(नचरतिद्, धीवराश्, तरातिम्, धीवराश्, धीवराश् )

यथा —

सर इव यं श्रिताघ निलयं स्फुरत्पद्मकं
जरयति यस्य च स्तुतिपरो विषं पद्मकम् ।

तमचलभेदनिस्सृतमनःशिलाकुङ्कुमं
नमत दधानमायतविषाणशंकुङ्कुमम् ॥

अत्यष्टिः ॥ ८४ ॥

अत्यष्टिर्नामाष्टषष्ट्यक्षरं छन्दः ।

हरिणी म्लू श्री नूनी ॥ ८५ ॥

(तरतिम्, कुरुतेल्, नूनंसाग्, धीवराश्, ननुर्, धीवराश् )

यथा —

स्फुरदुरुघनच्छत्राभोगः स्फुटश्वसनध्वनिः
सविषविषमो दंष्ट्राटोपश्चलद्विषमेक्षणः ।
विवृतदर्शनश्चण्डाजिह्वो दिधक्षुरुपागतो
भुजगपतिरत्युग्रक्रोधो मुने ! शमितस्त्वया ॥

शिखरिणी कूम्लाज् ॥ ८६ ॥

(कुशाङ्गीङ्, नूनंसाग्, तरतिम्, कुरुतेल्, सातवत, नदीज् )

यथा —

न वक्त्रं संरम्भादधरमणिसन्दंशकलुषं
न बाहुर्निष्कृष्टस्फुरदसिमयूखैरनुसृतः ।
शरीरं नाकर्णस्थितशरधनुर्मण्डलगतं
स भग्नश्चानङ्गो जयति विधिपूर्वो भगवतः ॥

पृथ्वी क्लृज् म्शी ॥ ८७ ॥

(विभातिक्, कुरुतेल्, नदीज्, तरतिम्, धीवराश्, धीवराश् )

यथा —

असम्भृतपयोधराममलचन्द्रसौम्याननां
श्रमेण महताऽऽगतो मदनबाणवेगातुरः ।
परिष्वजति पीडितं रहसि यः प्रसुप्तां प्रियां
मृतोऽपि स न बन्धुभिः समनुशोचनीयो नरः ॥

वंशपत्रपतितं तीमारु नू ॥ ८८ ॥

(सातवत्, धीवराश्, तरातिम्, सातवत्, ननुर्, कुरुतेल्)

यथा —

पुष्पसमुज्ज्वलाः कुरवका नदति परभृतः
कान्तमशोकपुष्पहसितं चलति किसलयः ।
चूतसुगन्धयश्च विपिने भ्रमररुतवहाः
सम्प्रति काननेषु सधनुर्विचरति मदनः ॥

मन्दाक्रान्ता सेरुशो नीनूँ ॥ ८९ ॥

(गङ्गास्, तेश्रीःक्वब्, ननुर्, कुरुतेल्, धीवराश्, लोलमालाष्)

यथा —

बाला तन्वी मृदुरियमिति त्यज्यतामत्र शङ्का
दृष्टा नैव भ्रमरभरतो मञ्जरी भज्यमाना ।
तस्माद्देषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समस्तम् ॥

धृतिः ॥ ९० ॥

१. 'भवता म' क. ख.

धृतिर्नाम द्विसप्तत्यक्षरं छन्दः ।

कुसुमितलता स्तायूशो नु ॥ ९१ ॥

(गङ्गास् , गङ्गास् , सातवल् , कमलिनीय् , धीव-
राश् , लोलमालाष् )

यथा —

आमोदामत्तोद्भ्रमरनयना प्रस्फुरत्पल्लवोष्ठी
पुष्पव्यापाण्डुः परभृतरुतव्यक्तरक्तप्रगीता ।
नृत्तोत्क्षिप्तांसा प्रचलितकरा भाति कान्तेव मत्ता
वायुव्याघूर्णा कुसुमितलतावेल्लिता चूतयष्टिः ॥

अतिधृतिः ॥ ९२ ॥

अतिधृतिर्नाम षट्सप्तत्यक्षरं छन्दः ।

शार्दूलविक्रीडितं गुकुस्तज् नौ ॥ ९३ ॥

यथा—

(नूनंसाग् , कुरुतेल् , विभातिक् , कुरुतेल् ,
गङ्गास् , कृशाङ्गीङ् , नदीज् )

यस्यां मत्तवरेभकुम्भदलनस्थूलप्रहारा रणे
वीराः संहतदन्तिदन्तकषणक्षुण्णोरुवक्षःस्थलाः ।
बद्धाच्छादसिधेनुसत्कटितटा रम्योज्ज्वलद्भूषणा
राजद्वारमुपागता विदधते शार्दूलविक्रीडितम् ॥

वायुवेगा गुकुदु नौ ॥ ९४ ॥

(नूनंसाग् , कुरुतेल् , विभातिक् , कुरुतेल् , नच-
रतिद् , कुरुतेल् )

यथा —

नीलैर्विद्युदलङ्कृतोरुशिखरैर्विपुलजलधरै-
व्योंम छन्नमुदारधीरनिनदैः क्षरदमृतलवैः ।
केकारावमिदं विमुञ्चति मुदा भुजगरिपुकुलं
सम्प्राप्ते जलदागमेऽतिशिशिरो विचरति[1] पवनः ॥

कृतिः ॥ ९५ ॥

कृतिर्नामाशीत्यक्षरं छन्दः ।

सुवदना स्स्तृणूद्द नृन्त् ॥ ९६ ॥

यथा —

(गङ्गास् , गङ्गास् , कृशाङ्गीङ्, जयनखरण् , नूनंसाग् , नचरातिद्)

तत्पीतं हन्ति संज्ञां कलुषयति वचो बुद्धिं भ्रमयति
ह्रीधर्मौ प्रच्छिनत्ति स्मृतिमपहरति द्वेषं जनयति ।
मुष्णाति प्रीतिमग्र्यां मलिनयति कुलं वृत्तं तुलयति
तन्मोहात्पानसंज्ञं यदि पिबति नरो मृत्युं स पिबति ॥

वृत्तं शिशिशिप् ॥ ९७ ॥

(धीवराश् , विभातिक् , धीवराश् , विभातिक्, धीवराश् , विभातिक्, चन्द्रप् )

यथा —

पुष्पपल्लवोज्ज्वलेषु पद्मषण्डमण्डितेषु मत्तकोकि-
लालिवृन्दकूजितेषु सार्धमेव माधवेन यो जघान ।
मीनशत्रुमायतेन मायतेन सायकेन सन्नताङ्गि
सज्यचापबाणपाणिरब्जचारुलोचने ससम्भ्रमीव ॥



1. Mss. 'विरचति'

प्रकृतिः ॥ ९८ ॥

प्रकृतिर्नाम चतुरशीत्यक्षरं छन्दः ।

स्रग्धरा गोदुशो नृन् ॥ ९९ ॥

(नूनंसाग्, लोलमालाष्, नचरातिद्, कुरुतेल्, धीवराश्, लोलमालाष्)

यथा —

दन्ताग्रप्रोतचञ्चुद्युतिदनुतनयासृग्वसादिग्धदेहो
यो भात्याजौ प्रधावद्व्रजतगिरिरिवावाससन्ध्याभ्रलेखः ।
सोऽव्यादैरावतो वः स्वकटघटतटप्रक्षरद्दानधारा-
स्वादोन्मत्तप्रहृष्टभ्रमरगुमुगुमारावकोलाहलास्यैः ॥

आकृतिः ॥ १०० ॥

आकृतिर्नामाष्टाशीत्यक्षरं छन्दः ।

मद्रकम् तीयिल्कु नै ॥ १०१ ॥

(सातवत्, धीवराश्, कमलिनीय्, विभातिक्, कुरुतेल् विभातिक्, कुरुतेल्)

यथा —

मृत्युपरायणे परमदुर्बले जगति तोयबुद्बुदसमे
व्याधिजरात्मके व्यसनभाजने रुदितशोकशल्यविहते

१. 'चञ्चद्द्युति' ख. ग.
२. 'हृष्यद्भ्र' ख.
३. 'लाल्य:' क, 'लाव्यः' ख.

क्रन्दितमूर्ध्वभोजवसिनिम्नधीरिह च यत्र नोभयत्र शतं
तत्र गतव्यथो विषयगोचरः शमयसीन्द्रियाणि नः ॥

अस्यैव ने पिङ्गळस्य ॥ १०२ ॥

अस्यैव मद्रकस्य दशमेऽक्षरे यतिर्भवति पिङ्गळस्याचार्यस्य मतेन ।

निकृतिः ॥ १०३ ॥

निकृतिर्नाम द्विनवत्यक्षरं छन्दः ।

अश्वललितं दीयिल्कु ने ॥ १०४ ॥

(नचरतिद्, धीवराश्, कमलिनीय्, विभातिक्-कुरुतेल्, विभातिक्, कुरुतेल्)

यथा —

मरतकशैलभित्तिसदृशोर्मिपातचलितप्रवाळविटप-
प्रकुपितभीमनक्रमकरक्षुतक्षुभितवारिवारणझषः ।
विविधविकीर्णरत्नकिरणातपच्छुरितनिर्मलोदरजलं
सजलपयोदगर्जितरवं स पालयतु वः कुलं जलनिधिः ॥

मत्ताक्रीडा स्गूण्णु नॄ ॥ १०५ ॥

(गङ्गास्, नूनंसाग्, नूनंसाग्: जयनखरण्, जयनखरण्, कुरुतेल्)

1. The latter half of this verse is defective in the Mss., and the third foot has one short syllable more and the fourth two short syllables less.

यथा—

विद्युन्नद्धं खं नष्टार्कं समुर-
पतिधनुरुपनतजलधरं
शष्पश्यामा रम्याः शैलाः द्रुत-
मुपलविवरनिपतितसलिलाः ।
वृक्षाकम्पो वायुश्चण्डः परिप-
तनशिशिरजलपृषतयुतः
फेनैः शुक्लैः कीर्णा नद्यो नव-
सलिलविसरसंमुपहततटाः ॥[1]

सङ्कृतिः ॥ १०६ ॥

सङ्कृतिर्नाम षण्णवत्यक्षरं छन्दः ।

तन्वी तेमुतादृस् नुनृ ॥ १०६ ॥

(सातवत्, तेश्रीःक्वब्, तरतिम्, कुरुतेल्, सातवत्, सातवत्, नचरतिद्, गङ्गास्)

यथा—

कामवशार्त्तस्तव सखि ! रमणः
सम्प्रति शुष्यति निशि शशिपादै-
र्विह्वलगात्रः प्रपतति शयने
निःश्वसिताकुलविगलितधैर्यः ।

१. 'समुपहत' ख. ग.

प्राञ्जलिनोक्तः प्रणमितशिरसा
साध्ववधारय रमणवचस्त्वं
मा तव कोपोज्ज्वलवररिपुहा
धक्ष्यति मामिति कथयति तन्वी ॥

**मेघमाला णीशीश्शी ॥ १०७ ॥**

(जयनरवरण्, धीवराश्, धीवराश्, धीवराश्, धीवराश्, धीवराश्, धीवराश् )

यथा —

चलकिसलयशोभिताशोकसाल-
प्रियालाम्रपुन्नागनागादिभि-
स्तरुभिरुरुभिरुज्ज्वलैर्मत्तपुं-
स्कोकिलोन्मादितैर्भूषितं काननम् ।
विकसितकमलोत्पलामोदग-
न्धोत्कटो वात्ययं दाक्षिणात्योऽनिलः
तव सुतनु समागतः कामसन्दी-
पनः काल एष प्रियः[1] सुन्दरि ॥

**अभिकृतिः ॥ १०९ ॥**

अभिकृतिर्नाम शताक्षरं छन्दः ।

**क्रौञ्चीपदा ञौण्णु नुन् ॥ ११० ॥**

(रौतिमयूरोत्र्, रौतिमयूरोत्र्, जयनरवरण्, जयनरवरण्, कुरुतेल् )

१ 'प्रिये इ' ग.

जलदाख्यस्य दण्डकस्य मध्ये दकारवृद्ध्या यथाक्रमं मेघः पिपीलिका पणवः करभः ललितामिति एते पञ्च दण्डकानि भवन्ति। एतदुक्तं भवति—जलदस्यैकः पादः त्रिंशदक्षरः, मेघस्य चतुस्त्रिंशदक्षरः, पिपीलिकाया अष्टत्रिंशदक्षरः, पणवस्य द्विचत्वारिंशदक्षरः, करभस्य षड्चत्वारिंशदक्षरः, ललितस्य पञ्चाशदक्षरः। एवं षट् दण्डका भवन्ति। तेषामन्त्यस्योदाहरणम्—

येन प्रांशुं क्रौञ्चस्याग्रं मणिकनकविमलनवरजत-
पटलहरवृषभसकलशशिकिरणकुमुदसदृशं
सिताम्बुजसन्निभम्
भिन्नं शक्त्या लीलावत्यास्तटविटपकुटचसितपन-
सतिमिशधवखदिरतिलकतरुगहनललित-
शिखरं लतागृहसङ्कटम्।
क्रीडाभूमिर्गन्धर्वाणां गजगवयमहिषरुरुपृषतशरभ-
मृगमिथुनपरमबहुविविधशकुनिचरितं
विपद्[1]द्रुतकिन्नरम्
सोऽरीन् वोऽद्भिर्देवो रोषात्तृषित इव पिबतु दहन इव
दहतु पवन इव वहतु तरुणरविसदृश-
वदनो मयूरवरध्वजः॥

तदधिको निचितः॥ ११७॥

तेभ्योऽधिकस्तज्जातीयो निचिताख्यो दण्डको भवति।



[1] Mss. विप्रद्रुत

चण्डवृष्टिप्रयातो णीश्शीश्शी ॥ ११८ ॥

चण्डवृष्टिप्रयातो नाम दण्डको भवति प्रतिपादं णीश्शीश्शी (जयनरवरण्, धीवराश्, धीवराश्, धीवराश्, धीवराश् ,धीवराश् , धीवराश्, धीवराश्) इत्यक्षरविन्यासो भवति चेत् । यथा—

मुदितजनपदाकुला[1] स्फीतसस्याकुला
भूतधात्री भवन्तं समभ्यर्चति
द्विरदकरविलुप्तहिन्तालतालीवनास्त्वां
नमस्यन्ति विन्ध्यादयः पर्वताः ।
स्फुटितविमलशुक्तिनिर्गीर्णमुक्ताफलै-
रूर्मिहस्तैर्नमस्यन्ति वः सागराः
मुदितजनपदैस्समाकीर्णकूलाश्च ते कीर्त-
यिष्यन्ति वर्णं महानिम्नगाः ॥

श्वृद्ध्यार्णवा-र्ण-प्लव-व्याल-जीमूत-लीलकरोद्दामासिंह-समुद्र-भुजङ्गाः ॥ ११९ ॥

चण्डवृष्टिप्रयाताख्यस्य दण्डकस्य पादे पादे क्रमशः शकार(धीवराश्) वृद्ध्या अर्णवः, अर्णः, प्लवः, व्यालः, जीमूतः, लीलाकरः , उद्दामा , सिंहः , समुद्रः , भुजङ्गः , इत्येते दश दण्डका भवन्ति । तत्रार्णवस्य पादे णकारात् परतः अष्टौ शकारा भवन्ति , अर्णस्य नव, प्लवस्य दश , व्यालस्य एकादश , जीमूतस्य द्वादश, लीलाकरस्य त्रयो-

1. Mss. 'पदा समाकीर्ण'

दश, उद्दाम्नश्चतुर्दश, सिंहस्य पञ्चदश, समुद्रस्य षोडश भुजङ्गस्य सप्तदश। एवमेते च दश दण्डका भवन्ति।

शेषाः प्रचिताः ॥ १२० ॥

उक्तेभ्यो दण्डकेभ्यः शकारवृद्ध्या येऽधिका दण्डकाः प्रचिता नाम ते भवन्ति। येषां पादे-पादे अष्टादश एकोन विंशतिः ततोऽधिका वा शकारवृद्ध्या भवेयुश्चेत्त एव शेषाः प्रचिताख्या दण्डका भवन्तीति। तत्रार्णवो यथा—

पर इह न करिष्यति त्वन्निमित्तं शुभं नापि चान्यैः
कृतं लभ्यते स्वश्रमो भुज्यते।
न च भवति कृतस्य नाशो न चैवाकृतस्यागमो
विद्यते बीजमुप्त्वा फलं प्राप्यते।
कृतमिति हृदयेन तुष्टेन मृत्युः सुखं दृश्यते न
ह्यकृत्वा भवेत्स्वस्ति तस्मिन् भवे
कुरु कुशलमलं प्रमादेन गृह्णीष्व दीपं प्रवेष्टव्यमेके-
न दीर्घं ह्यनन्तं तमः॥

अर्णो यथा —

शरणमनलसूर्यवायुप्रतीघातनष्टार्जवं तर्षमाच्छेत्तुमन्नं
क्षुधं शौचमार्गं मलं
वसनमपि शरीरकौपीनदोषप्रतिच्छादनार्थं गतिक्ले-
शनाशाय यानादयो विस्तराः।
शिशिरशमनमुष्णमुष्णप्रणाशाय शीतो विधिर्गात्र-
विश्रान्तिहेतोश्च शय्यासनापाश्रयाः

पुरुषगुणमिमं परित्रातुमाचैश्चिकित्सेयमारभ्यते यत्र
भोगार्थसंज्ञा नृणां जायते ॥

प्लवो यथा —

जलनिधिवसनापि भूर्यस्य तस्यैक एवाधिवासः पुरं
तत्र चैकं गृहं तद्गृहे चैक एवालयो
निवसनयुगमेकमेवात्मकौपीनशाट्यर्थमेकैव[1] शाला-
निवृत्तिप्रवृत्त्योस्तु[2] तत्सर्वथा मुक्तभावः सुखम्[3] ॥

शेषाणामुदाहरणानि ग्रन्थविस्तरभयान्नोदाहृतानि ।
तान्यपि काव्येषु सूत्रालङ्कारादिषु द्रष्टव्यानि ॥

इति जानाश्रय्यां छन्दोविचित्यां
समवृत्ताध्यायश्चतुर्थः ॥

---

१. Mss. 'शाखार्थमेकैव'
२. Mss. 'निवृत्तिवृत्तितत्सर्वथा'
३. The latter half of the verse is not seen in the Mss.

## अथ पञ्चमोऽध्यायः ॥

---

वृत्तान्युक्तानि । इदानीं जातयो वक्ष्यन्ते । वक्ष्यति भवान् जतिरिति । इदं तावदुच्यतां जातिवृत्तयोः किं नानात्वमिति । अत्रोच्यते —

**जातिरेकाप्यनेकस्मिञ्छन्दसि भवति वृत्तमेकमेकस्मिन्नेव ॥ १ ॥**

इदमनयोर्नानात्वम् । सात्वनेकस्मिन् छन्दसि वर्तमानापि मात्रालक्षणतस्तुल्यजातीयैव । तत एवोच्यते जातिरिति ।

### अथ वैतालीयप्रकरणम् ।

तत्र तावत् —

**वैतालीयं चतुर्दशायुजि हाः ॥ २ ॥**

वैतालीयं नाम जातिरुच्यते । तस्य वैतालीयस्यायुजि प्रथमतृतीययोः पादयोश्चतुर्दश हकारा भवन्ति ।

**युजि षोडश ॥ ३ ॥**

तस्यैव युजि द्वितीयचतुर्थयोः पादयोः षोडश हकारा भवन्ति ।

**भ द्वयोरन्ते ॥ ४ ॥**[1]

द्वयोरयुग्युजोः पादयोरन्ते भकारो भवति । तद्यथा[2]—

अभिनादितमम्बराद् घनै-
र्घननादैः प्रतिगर्जितो गजः ।

१. This sūtra and its vṛtti are missing in ख.
२. 'पादयोरन्ते हकारो भवति— तद्यथा' ख.

गजरावितकन्दरो गिरि-
गिरितुल्यैरभिषिच्यतेऽम्बुदैः ॥

**भा चौपच्छन्दसिकम् ॥ ५ ॥**

तस्यैव द्वयोरयुग्युजोः पादयोरन्ते गुरुश्चापरो[1] भवति (चेदौपच्छन्दासिकं नाम भवति)। तद्यथा—

सलिलं विमलं तमालनीलं
स्वनिलोद्धूततरङ्गतुङ्गश्रृङ्गम्।
विलसत्कलहंसलोलमालं
विलसत्कोकनदं मनो दुनोति ॥

**आपातलिका ॥ ६ ॥**

तस्यैव वैतालीयस्यान्ते द्वयोरयुग्युजोः पादयोः भकारो (रौतिमयूरोऽ्)भवति चेदापातलिका नाम भवति । यथा—

अम्भोदानामसितानां
श्रुत्वा शब्दं सन्ततबर्हः ।
अम्भोभि[2]रमन्दगतीना-
मुद्ग्रीवोऽयं रौति मयूरः ॥

**[3]द्वे उपजाती ॥ ७ ॥**

जातौ औपच्छन्दसिकापातलिके उपजाती इत्यु-

१. ‘ब.’ ग.
२. Mss. ‘आरात्म’
३. Mss. omit this sûtra.

च्येते । वैतालीयजातिमाश्रित्य जातत्वात् वैतालीयस्यान्तर्लक्षणमुक्तम् । इदानीमादिलक्षणमुच्यते ।

**नादौ परेण युग्लघवः सार्धम् ॥ ८ ॥**

सोपजातेर्वैतालीयस्यादौ अयुक्पादे षड् लघवः । युक्पादे अष्टौ लघवः । तत्र परेण लघुना सार्धं युग्लघुर्न भवति । उभावपि मिश्रयित्वा एको गुरुर्न प्रयोक्तव्य इत्यर्थः ।

**युक्पादे न णः ॥ ९ ॥**

सोपजातेर्वैतालीयस्यादौ युक्पादे नैव णकारो भवति। अयुक्पादे न विधिर्न प्रतिषेधः । तस्मात्तत्र भवति वा न वा । यथा —

जलधरपटलान्तनिस्सृत-
स्समये दीप्तमयूखमण्डलः ।
प्रविततिमिरप्रभेदको[1]
नभसः क्रुद्ध इवोत्थितो रविः ॥

अयुजि यस्मिन् पक्षे णकारो न भवति तस्योदाहरणं यथा —

मृदुतामुपयान्ति मारुताः
प्रलयं यान्ति शनैर्वलाहकाः ।
पुनरागतहंससारसा
शरदाक्रामति वार्षिकीं श्रियम् ॥

1 'रप्रभेदकम्' ग.

युजि चतुर्थेनोत्तरः सार्कं प्राच्यवृत्तिः ॥ १० ॥

तस्यैव सोपजातेर्वैतालीयस्यादौ युक्पादे चतुर्थेन लघुना सार्धमुत्तरो लघुर्मिश्रितो भवति चेत् प्राच्यवृत्तिर्नाम भवति । यथा —

पुलिनैः प्रतिभान्ति निम्नगाः
सारसाग्रचरणाङ्ककर्दमैः ।
कलहंसविकीर्णमेखलाः
कान्तभुक्तजघना इव स्त्रियः ॥

अयुज्यप्यपरान्तिका[1] ॥ ११ ॥

तस्यैव वैतालीयस्यादौ अयुक्पादेऽपि चतुर्थेन लघुना सार्धमुत्तरः पञ्चमो लघुर्मिश्रितो भवति चेदपरान्तिका नाम भवति । यथा —

भान्ति साम्प्रतं जलाशया
हंसचक्रवाकांसकम्पितैः ।
सम्प्रदीप्तकाननोपमाः
पङ्कजैर्विबुद्धैः समाकुलाः ॥

द्वितीयेनोदीच्यवृत्तिः ॥ १२ ॥

तस्यैव सोपजातेर्वैतालीयस्यादावयुक्पादे द्वितीयेन लघुना उत्तरस्तृतीयो लघुर्मिश्रितो भवति चेद् उदीच्यवृत्तिर्नाम भवति । यथा —

1. Mss. अयुज्यपरान्तिका.

मनोज्ञमपि सिन्दुवारतः
कुन्दकुसुममग्रयं च षट्पदः ।
न सर्पति तुषारशङ्कित-
श्चन्द्रालोकविशेषशीतलम् ॥

युज्यपि दाक्षिणान्तिका ॥ १३ ॥

तस्यैव सोपजातेर्वैतालीयस्यादौ युक्पादेऽपि द्वितीयेनोत्तरस्तृतीयो लघुर्भवति चेत् दक्षिणान्तिका नाम भवति । यथा —

कदम्बगन्धोल्बणावनिः
प्रवान्ति केसरयूथिकानिलाः ।
सतोयभरलम्बिनो घनाः
भ्रमन्ति मुदितरवा जलदागमे[1] ॥

प्रसक्तकं प्राच्योदीच्यवृत्तिभ्याम् ॥ १४ ॥

प्रसक्तकं नाम भवति प्राच्योदीच्यवृत्तिभ्यां भवति चेत् । यथा —

विघाटितपयोधरार्गलं
निर्मलोज्ज्वशशाङ्कमण्डलम् ।
दिवाकरमरीचिसंक्षये
धौतहर्म्यमिव लक्ष्यतेऽम्बरम् ॥

सोपजातेर्वैतालीयस्योक्तत्वात् प्राच्यवृत्त्यपरान्तिकोदीच्यवृत्तिदाक्षिणान्तिकाप्रसक्तकानि औपच्छन्दसिकापातलिकयोरपि भवति ।

1. This pāda contains one excess mātrā.

तत्रौपच्छन्दसिकप्राच्यवृत्तिर्यथा —

आभिवीक्ष्य नितान्तताम्रपद्मं
सम्प्रदीप्तमिव केचिदम्भः ।
न भयादुपयन्ति वारणेन्द्रा
दाववह्निचकिताः समुन्नदन्तः ॥

औपच्छन्दसिकापरान्तिका यथा —

द्यौर्विभाति पूर्णचन्द्रवक्त्रा
प्रोन्मिषद्विविधतारकाकुलाक्षा ।
चन्द्रिकादुकूलसंवृताङ्गी
कन्यकेव हि विवाहवेषयुक्ता ॥

औपच्छन्दसिकोदीच्यवृत्तिर्यथा —

नवाम्बुधरवृन्दचुम्बितालकाग्राः ।
जलदोन्मत्तमयूरभूषिताग्राः ।
[2] बिन्द्वजितनीलविद्रुमाग्राः
गिरयः सर्जकदम्बवासिताग्राः ॥

औपच्छन्दसिकदक्षिणान्तिका यथा —

गुणैरनुपमो वसन्तकालो
मनो हरति नृणां मनोज्ञरूपः ।
प्रपुष्टपरपुष्टवृन्दपोषः
प्रबुद्धकमलाम्रबोधितालिः ॥

१. This pada is deficient in three mātras.
२. Mss are defective here.
३. 'पमैवैस' ब. ग.

औपच्छन्दसिकप्रसक्तकं[1] यथा —

दिवाकरमरीचिसम्प्रतप्ताः
दाववह्निपरिदग्धगुल्मधूम्राः[2] ।
जलैर्नवबलाहकाभिवृष्टै-
रुच्छ्वसन्त इव भान्ति पर्वतेन्द्राः ॥

आपातलिकायाश्चोदाहरणान्येवं ज्ञेयानि ।

इति वैतालीयप्रकरणम् ।

---

## अथ मात्रासमकप्रकरणम्[3] ।

वैतालीयजातिः सोपजातिरुक्ता । इदानीं मात्रासमकजातिर्वक्ष्यते ।

**गणाश्चत्वारो मात्रासमकम् ॥ १५ ॥**

अयुक्पादे युक्पादे च गणाश्चत्वारो भवन्ति चेन्मात्रासमकं नाम भवति ।

**सु वान्त्यम् ॥ १६ ॥**

तस्यैव मात्रासमकस्यान्त्यो गणः सकारः (गङ्गास्) उकारो (कुरुतेल्) वा भवति ।

१. 'प्रवर्तकं' ख.
२. 'रितप्तगु' क.
३. This section is found to be highly defective in the Mss. and the verses cited seldom illustrate the rules and often contain less or more syllables than required.

तृतीयो ल् ॥ १७ ॥

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च गणस्तृतीयो लकारो (कुरुतेल्) भवति ।

अश्मश्रुमुखैर्विषमैर्दन्तैः
गम्भीराक्षैर्वलिनासाग्रैः[1] ।
निर्मांसहनुस्फुटितैः केशै-
र्मात्रासमकं लभते दुःखम् ॥

द्वा वानवासिका ॥ १८ ॥

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च तृतीयो गणो दकारो (नचरतिद्) वा भवति चेद् वानवासिका नाम भवति । यथा —

वद किं कमलासि भीरु लक्ष्मि
मा चन्द्रप्रभा रतिर्वामतनुरथापरासि साक्षात् ।
प्रमदान्या वानवासिका त्वम् ॥ (?)

विश्लोको द्विद्वितीयः[2] ॥ १९ ॥

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च (द्वितीयः) दकार इकारो वा भवति चेद्विश्लोको नाम भवति ।

१. Mss. 'साग्रम् '.

२. Mss द्वितीय ;

यथा —

नष्टेन्द्रचापविद्युत्पतना-
न्धकारं विकीर्णतारं समये।
निस्तोयतोयधरनष्टरवं
राजति वृत्तविमलं गगनम् ॥ (?)

तृतीयश्च द्लिश्च ॥ २० ॥

तस्यैव मात्रासमकस्य तृतीयो द्वितीयश्च दकारो वा लकारो वा इकारो वा भवति चेत् चित्रा नाम भवति।

यथा —

पद्मप्रियाङ्गुनिभामलाङ्गी
पीनस्तनी कृशचारुमध्या।
विभ्राजतेऽवनितलेन्द्रयूना
चित्रा यथोडुपतिना चित्रा ॥

साचोपचित्रा ॥ २१ ॥

तस्यैव मात्रासमकस्यायुक्पादे युक्पादे च तृतीयो गणो द्वितीयश्च सकारो वा अकारो वा भवति चेदुपचित्रा नाम भवति। यथा—

पल्लवशाटकसंवृताङ्गी
भीमामरकुलकुसुमाढ्या।
शाखावाहलतानिलवगा
नृत्यति वै सहकारलतेयम् ॥

**एभिः पादाकुलकम् ॥ २२ ॥**

एभिर्वानवासिका-विश्लोक-चित्रो-पचित्रालक्षणैरेकस्मिन् रूपे सह सम्भूतैः पादाकुलकं नाम भवति यथा—

अम्भोभारप्रलम्बबिम्बा
वृन्दं प्रयान्ति गगने जलदाः।
नृत्यच्छिखण्डिकचिताः शैलाः
सङ्कीर्णा भूर्गोपकसङ्घैः ॥

**अभा गीत्यार्या ॥ २३ ॥**

मात्रासमकस्यैव पादा गुरुविरहिता भवन्ति चेद् गीत्यार्या नाम भवति। यथा—

वकुलकुमुदकुवलयनवपटुमधु-
करविरचितकमलमतिसुरभि।
सलिलमिदमसितपटनिभमतितनु-
शिखरसंहितदाति शरदिति कथयति ॥

**शिखार्धे भाः ॥ २४ ॥**

गीत्यार्याया एवार्धे गुरवो भवन्ति चेच्छिखा नाम भवति। यथा—

कादम्बानां पक्षोद्धूतैः
पद्मैः कीर्णैराक्रोशद्भिः।
सलिलमिदमसितपटनिभमतितनु-
शिखरसहितदाति। शरदिति कथयति ॥

1. Mss. omit 'सहित'

चूळिका णणणय् । २५ ॥

चूळिका नाम भवति अर्धे एते गणा भवन्ति चेत् ।

यथा —

वरयुवतिहृतहृदय किमसित-
सुरतसुरभि भवसि मम गृहम् ।
खल विरमपुरथवरयुवतिजघन-
गतमसि भवति नय च शुभम् ॥

ह्राधिका तारा ॥ २६ ॥

इयमेव चूळिका अर्धे एकेन लघुनाधिका भवति चेत् तारा नाम भवति । यथा —

चलशिथिलधृतिषु वहुविकृतगातिषु
दुर + + + क्षिगमतिषु शठकृतिषु ।
बहुविधमशुभमु + ह्रहृदय
किमिति विगणयसि करितयुवतिषु ॥

इति मात्रासमकप्रकरणम् ।

---

अथ आर्याप्रकरणम् ।

मात्रासमकजातिः सोपजातिरुक्ता । इदानीमार्याजातिः सोपजातिर्वक्ष्यते ।

**सप्तार्धं चार्यायाः ॥ २७ ॥**

गणा इति च अर्ध इति चानुवर्त्तते । अतोऽर्धे सप्त गणाः गणस्यार्धं चार्यया भवति ॥

**अत्रायुक्क् न ॥ २८ ॥**

अत्र पुनरार्याया अर्धे अयुग्गणः ककारो न भवति युग्गणो भवतीत्यर्थः । अत्रग्रहणमस्मिन्नार्याधिकारे विहितानां वामनिका-गीतिका-यौगीतिकानामार्यालक्षणप्राप्त्यर्थम्[1] । तस्मात् सर्वत्रायुग्गणः ककारो न[2] भवतीत्युक्तं भवति ।

**द्वि वा षष्ठः ॥ ९ ॥**

नियमार्थं वचनम् । आर्यायाः पूर्वार्धे दकारः (नचरतिद्) इकारो (विभातिक्) वा भवति ।

१. 'प्रापणार्थम्' ख. ग.
२. MSS. omit this word

[1]ध्यादौ यतिः ॥ ३० ॥

[2]षष्ठो गणो यदि दकारो भवति तदा तस्य गणस्य प्रथमाक्षरे यतिर्भवति । यथा—

आर्या प्रसन्नरूपा गृहीतशुभवेषविनयचारित्रा ।
यस्य कुलीना नारी प्रियमनुकूलमनसः श्रीमान् ॥

सप्तमपूर्वान्त्ये ॥ ३१ ॥

यदिधयतिरित्यनुवर्तते । यदि सप्तमो गणो दकारो भवति तस्य गणस्य यः पूर्वो गणः षष्ठः तस्यान्त्येऽक्षरे यतिर्भवति । यथा—

व्याकोशकुमुदतारकविलीनविमलेन्द्रनीलसम-
[सलिलाः ।
हंसकदम्बकचन्द्राः शरन्नलिन्यो द्युवद्भान्ति ॥

परार्धे पञ्चमश्च ॥ ३२ ॥

परार्धे पञ्चमश्च गणो यदि दकारो भवति तस्य गणस्य यः पूर्वो गणश्चतुर्थः तस्यान्त्येऽक्षरे यतिर्भवति ।

यथा—

दिनकरदीधितिबोधितसरसिजमकरन्दसदशनः
[शरदि ।

१. MSS. read दयादौ.
२. MSS. add तत्प्रथमाक्षरे before this word.

नूपुररवमनुकुर्वन् कूजति मदमुदितकलहंसः ॥

षष्ठो ह्ः ॥ ३३ ॥

आर्यायाः परार्धे षष्ठो गणो ह्कार एव केवलो भवति ।

पथ्योभयोर्निः ॥ ३४ ॥

यतिरनुवर्तते मण्डूकप्लुत्या । आर्याया उभयोरप्यर्धयोस्तृतीये गणे यतिर्भवति चेत् पथ्या नाम भवति । यथा—

चारित्रनिर्मलजलः सत्पुरुषनदोऽक्षयो भवतु नित्यम् ।
यस्य विभवारविन्दे मित्रभ्रमराः कृतविहाराः ॥

विपुलान्या ॥ ३५ ॥

या पथ्यालक्षणाया आर्याया अन्या आर्या सा विपुला नाम भवति । एतदुक्तं भवति—तृतीये गणे उभयोरप्यर्धयोर्यस्या न यतिर्जाता सा विपुला नाम भवति । यथा—

मां कथय चन्द्र याचे परविषयगतस्य कान्तस्य ।
आपाण्डुरेति शिथिलेति लम्बाळकेति मलिनेति ॥

द्वितीयचतुर्थौ भामध्ये चपला कः ॥ ३६ ॥

आर्याया उभयोरर्धयोर्द्वितीयश्चतुर्थश्च गणो गुरुमध्ये ककारो (विभातिक्) भवति चेत् चपला नाम भवति । यथा—

१. सुन्दरपाण्ड्यशतकम् (नीतिद्विषष्टिका)

२. MSS. interchange the two halves of the verse.

साधारणोष्णशीतः प्रचण्डवातावधूतवनविवरः ।
अवगाहते वसन्तः सकिंशुकाशोकशतपत्रः ॥

मुखचपलाद्ये ॥ ३७ ॥

आर्याया आद्येऽर्धे भामध्ये द्वितीयश्चतुर्थश्च गणः क्कारो भवति चेन्मुखचपला नाम भवति । यथा—

चित्रोतशक्रचापोच्छ्रितध्वजं जलधिनिनदपटुनिनदम् ।
दिनकरनृपतिभयंकरजलधरसैन्यं समुपयाति ॥

जघनचपलान्त्ये ॥ ३८ ॥

आर्यया अन्त्येऽर्धे द्वितीयश्चतुर्थश्च गणो भामध्ये ककारो भवति चेत् जघनचपला नाम भवति । यथा—

धारापातैर्वाताकृष्टैर्विप्रोषितेन्दुनक्षत्रम् ।
आस्रावतीव दुःखेन तीव्रमुत्कण्ठितं व्योम ॥

वामनिकाद्ये षष्ठो ह्ः ॥ ३९ ॥

आर्याया आद्येऽप्यर्थे षष्ठो गणो लघुरेव केवलो भवति चेद् वामनिका नाम भवति । यथा —

प्रविततताराककुमुदे
गतमेघे शरदि सौम्ये च ।
चन्द्रो विभाति सम्प्रति
हंस इव नभःसरस्येषः ॥

गीतिरन्त्ये दि वा ॥ ४० ॥

आर्याया अन्त्येऽप्यर्धे षष्ठो गणो दकार इकारो वा भवति चेद् गीतिर्नाम भवति । यथा —

भ्रमदलिकुलविरुतप्रवितत-
कमला विभान्ति कमलिन्यः[1] ।
भासुरमरतकमणिनिभकोमल-
मृदुचारुवर्णसञ्छन्नाः ॥

ध्रुवोभयोर्नौ ॥ ४१ ॥

सैव गीतिश्चतुर्थे गणे यतिरुभयोरर्धयोर्भवति चेद् ध्रुवा नाम भवति । यथा —

ललनावनानि नीलालकानि ललितानि राजन्ति ।
बन्धुजीवाधराणि रतिभोगसारसहितानि[2] ॥

गीतिका सप्तमो यी वा ॥ ४२ ॥

सैव गीतिर्गीतिका नाम भवति, सप्तमो गणो यकार ईकारो वा भवति चेद् । यथा —

त्वामिह धन्यां मन्ये
विचित्रधर्मार्थकामसंश्रयासु ।
यस्य चरितं तव मनो
विद्वज्जनवल्लभासु गीतिकासु ॥

1. The first half of the verse is deficient in two matras.



2. The verse is deficient in ten matras.

क्वचित् तृतीयश्च पञ्चमोऽपि ॥ ४३ ॥

क्वचित्प्रयोगान्तरे उभयोरप्यर्धयोस्तृतीयश्च पञ्चमश्च गणो यकार ईकारो वा भवति। अपिशब्दादेकस्मिन्नप्यर्धे भवति। प्रयोगे यत्नः कार्यः।

पूर्णार्धार्यागीतिः ॥ ४४ ॥

सैव गीतिः पूर्णार्धा आर्यागीतिर्नाम भवति। यथा —

एतत्त्वद्भुजयुगलं मन्दर-
गिरिभित्तिघट्टिताङ्गदवलयम्।
आत्ति तुमुलसरपातितकर्म[1]
रुधिररागसम्भृतचर्म ॥

इत्यार्याप्रकरणम्।

---

आर्याजातिः सोपजातिरुक्ता। इदानीमन्याश्च काश्चिज्जातयो लोके प्रचरन्त्यो वक्ष्यन्ते।

प्रतिपादं पञ्चार्धं च गलितम् ॥ ४५ ॥

पञ्च गणा गणस्यार्धं च पादे पादे भवन्ति चेद् गलितं नाम भवति। यथा —

न स्मरसि किं त्वदीरितशरभासुरताना-
मटवीषु चोग्रकेसरिशिरभासुरतानाम्।

[1] 'तम्म' for 'कर्म' क. ग.

अथवा वसन्त[1]दृष्ट्या निशातदन्तस्य
प्रातर्बोधाय शरान्निशातदन्तस्य ॥

चत्वारो निर्धायिका ॥ ४६ ॥

चत्वारो गणाः प्रतिपादं भवन्ति चेत् निर्धायिका नाम भवति ।

यी वान्त्यः ॥ ४७ ॥

अन्त्यो गणश्चतुर्णां पादानां निर्धायिकाया यकारो (कमलिनीय् ) वा ईकारो (धीवराश्) वा भवति ।

क्तृतीयः ॥ ४८ ॥

तस्या निर्धायिकायाः प्रतिपादं तृतीयो गणः प्रायेण ककारो (विभातिक् ) भवति । यथा—

बाले ! बालेन्दुखण्डधारिणा
क्रोधाद्दग्धोऽपि मन्मथाधमः ।
सकलं लोकं हि चण्डमानसो
निशितैर्बाणैर्भिनत्ति मर्मसु ॥

पञ्च [2]नैक्कुटकम् ॥ ४९ ॥

प्रतिपादं पञ्चगणा भवन्ति चेन्नैक्कुटकं नाम भवति ।

१. 'वसन्तकस्य दृष्ट्या' क. ग.
२, १. 'नक्कक्कुटकम्' ख., 'नकुकुंटकम्'. क.

यी वा द्वितीयतृतीयौ ॥ ५० ॥

तस्यैव नक्कुटकस्य द्वितीयतृतीयगणौ यकार ईकारो वा भवति ।

तृतीयो ब्वा ॥ ५१ ॥

तस्यैव नर्क्कुटकस्य तृतीयो गणो बकारो (ते श्रीः क्वब्) वा भवति । यथा —

उपरि विधूतभस्मनिकरप्रवरसुरभित-
श्रवणभुजङ्गवक्त्रमरुता दहनकणमुचा ।
धवलितमिन्दुखण्डकिरणैः क्षरदमृतलवैः
कपिशमयूखभिन्नतिमिरं नयनमवतु वः ॥

इदं वरं एष विजृम्भमाणः कुमुदानन्दः
स तु नवनीतपिण्डसदृशास्तिमिराविमथनः ।
रजनीकरोऽप्युपैति शनैर्गगनं
नीलसरस इव नीलं विपुलं हंसः ॥

षडधिकाक्षरा ॥ ५२ ॥

प्रतिपादं षट् गणा भवन्ति चेदधिकाक्षरा नाम भवति ।

१. MSS. omits this sūtra.
२. ख. omits this sentence and the next sūtra.
३. 'नर्क्कुटकस्य' क.
४ This verse is defective in the number of mātras.

युङ्न क् ॥ ५३ ॥

तस्या अधिकाक्षरायाः प्रतिपादं युग्गणः ककारो (विभातिक्) न भवति ॥

क्तृतीयः ॥ ५४ ॥

तस्या अधिकाक्षरायाः प्रतिपादं तृतीयो गणः ककार एव भवति ।

यी[1] वान्त्यः ॥ ५५ ॥

तस्या अधिकाक्षरायाः प्रतिपादमन्त्यो गणो यकार (कमलिनीय्) ईकारो (धीवराश्) वा भवति ।

क्वचिदाद्योऽपि ॥ ५६ ॥

तस्या अधिकाक्षरायाः क्वचित् प्रयोगान्तरे आद्योऽपि गणो यकार ईकारो वा भवति । यथा —

वि[2]कसितनीलोत्पलार्चितमदनबाणदीपनं
ध्रुवं मधुषपकार्येतिशायिनं दयितमुखसमर्पितम् ।
सुतनु निषेवितेवति रतिरहस्तनुतरङ्गविह्वलं
नववागधिकाक्षरा यथा च श्रुतिमनोभिनन्दिनी ॥(?)

शीर्षकं गीतिकापरा ॥ ५७ ॥

१. ख. omits this letter,

२. This sūtra, its vṛtti and the next sūtra are omitted in ख.

३. The verse is defective in the MSS.

४. 'चखिता' ख. ग.

५. तयव' ख. ग.

सैवाधिकाक्षरा गीतिकापरा भवति चेत् शीर्षकं नाम भवति । यथा —

विचरन्ति महेन्द्रगोपका नीलशाड्वलश्रियः
स्तोकं ग्रहचन्द्रभास्कराञ्छादयन्ति नीरदाः ।
मेघोदकचारिणी च विलसति तटित् समन्ततः
प्रणदन्ति वनस्थलीषु मुदितमनसश्च चातकाः[1]॥
कुटचकुसुमाधिवासितासिलिन्ध्रकन्दळवनान्तसेविनश्च ।
वान्ति पवनाः प्रवासिनां कुर्वन्ति[2] सोत्सुकानि मानसानि ॥

एकैकवृद्ध्या ललित-सुभद्रा-विद्रुम-वंशपत्र[3]-कुञ्जर-पुष्पदन्त-मालाः ॥ ५८ ॥

[4]अधिकाक्षराया गीतिकापरायाः प्रतिपादं एकैक-गणवृद्ध्या ललितं, सुभद्रा, विद्रुमः, वंशपत्रं, कुञ्जरः, पुष्पदन्तः, माला इत्येवंनामकानि[5] सप्त शीर्षकाणि भवन्ति । तत्र ललितस्य पादः सप्त गणा भवन्ति, [6]अन्ते गीतिका च । सुभद्राया अष्टौ, अन्ते गीतिका च । एवं शेषाणि शीर्षकाणि एकैकवृद्ध्या ज्ञेयानि ।

१. 'सश्चातकाः' क.
२. MSS. 'न्ति च सो'.
३. 'वंशपुष्प' ख. ग.
४. MSS. omit अधिकाक्षरायाः.........माला.
५. 'नामानि' ख. ग.
६. क. omits this sentence.

निर्धायिकामध्यं त्रिकलयम् ॥ ५९ ॥

उक्तप्रकारं शीर्षकं निर्धायिकामध्यं भवति चे त्रिकलयं नाम भवति । आदावधिकाक्षरा मध्ये निर्धायिक अन्ते गीतिका; एवमेतास्तिस्रस्त्रिकलयमिति । यथा —

विकसितकुसुमं निशागमे पूर्ण[1]चन्द्रबोधितं
सङ्कोचमुपैति पङ्कजं भ्रमर एव सोत्सुकः ।
विनदन्ति मनोहराणि केदारोदरसंस्थिताः
कान्तासहिता विचिन्त्य किमपि कलहंससारसाः ॥
शालारूढैरिवेन्द्रगोपकैः
पुष्पैर्विभान्ति च बन्धुजीवकाः ।
शर्वर्य इव प्र[2]कीर्णतारका
विकसितकुसुमा विभान्ति शीर्षकाः ॥
सप्रच्छदमकरन्दं[3] विहाय कुसुमातिपातिलोलुपानि ।
मधुकरकुलानि सादरं श्रयन्ति कुमुदानि रेणुपाण्डराणि ॥

गणास्त्रयो भङ्गद्विपदी ॥ ६० ॥

त्रयो गणाः प्रतिपादं भवन्ति चेत् भङ्गद्विपदी नाम भवति, गणाधिकारे वर्त्तमाने पुनर्गणग्रहणं चतुर्लघूनां पञ्चलघूनां च सर्वेषां गणानां चाभेदेन[4] ग्रहणार्थम् । इतरथा हि चतुर्लघूनामेव ग्रहणं स्यात् ।

१. MSS. omit 'पूर्ण'.
२. MSS. 'विकीर्ण'.
३. 'न्दंमवि' ख. ग.
४. 'दोऽपि' ग. ङ.

चत्वारः पञ्च षट् सप्त वा ॥ ६१ ॥

तस्या भङ्गद्विपद्याः न केवलं त्रय एव गणा भवन्ति । चत्वारो वा पञ्च वा षड् वा सप्त वा भवन्ति ।

भान्ते वा ॥ ६२ ॥

तस्या भङ्गद्विपद्याः प्रतिपादं गुरुरन्ते भवति वा न वा ।

त्रिंशद्वा परमा ॥ ६३ ॥

त्रिंशल्लघवो यस्या भङ्गद्विपद्याः सा भवति त्रिंशद्वा परमाधिका भङ्गद्विपदी , ततः सर्वाभ्यो भङ्गद्विपदीभ्यो या परमा सा त्रिंशद्वा भवति । तदधिका नास्ति ।

द्विपदी गीतिकापरा ॥ ६४ ॥

सैव भङ्गद्विपदी द्विपदीत्युच्यते गीतिकापरा भवति चेत् । उदाहरणम्—

क्षीणमम्बु वापीषु सरित्सु च साम्प्रतं
रक्ष्यमाणं बहुधनमिह भाग्यविपर्यये ।
तप्तपांसुरेषा च विशुष्कवनद्रुमा
बद्धचोरमत एव मही परितप्यते ॥

अवसीदति श्रमासहं गात्रं माहिषस्य घर्ममूर्छितस्य ।
बहुपोष्यबालपरिजनं गृहतन्त्रमिवातुरं निरुद्यमस्य ॥

इयमपरा द्विपदी —

करुणाकर निष्करुणेन वायुना
रिपुवारवारणदानगन्धिना ।

बहुवल्लभविप्रयोजितो जन
कान्तो जनश्चरताद्य दूयते ॥ (१)

अधुना मधुकरबन्धुना बन्धूकेन सरजस्ककेसरेण ।
भवतेव जगद्बन्धुना कुलमण्डनमाण्डितानि भूस्थलानि ॥

क्वचिद्विदारी मध्ये ॥ ६५ ॥

क्वचित् प्रयोगान्तरे भङ्गद्विपदीगीतिकयोर्मध्ये विदारी भवति । विदारीलक्षणमुत्तरत्र वक्ष्यति । यथा—

अभिनवकन्दलीकुसुमकेसरलीलाधरस्थलीमुखाः
कुसुमितकुटचसुरभिपरागाविराजितसानुकाननाः ।
समदमयूरमधुकरकेकारावपूरितकन्दरोदराः
ससलिलमुखरजलदमलिना गिरयो रमयन्ति
[मानसम् ॥

केतकसूचिभिदा मरुता
बकुलरजांसि समुद्वहता ।
अभिमुखदयितजनोऽपि जनः
सोत्सुक एव बलात्क्रियते ॥

भवनुन्नातपरेणुना करेणुनाथ मलिनेन तोयदेन ।
उपगिरिमुदन्तविद्युता सकलं जगदर्ध्यते मनोभवाय ॥

विदारी भान्ताश्चतुर्दशलघवः ॥ ६६ ॥

गुर्वन्ताश्चतुर्दश लघवः प्रतिपादं भवन्ति चेत् विदारी नाम भवति ।



१. MSS. omit 'गुर्वन्ताश्चतुर्दशलघवः'.

मिश्रः पञ्चमः प्रायः ॥ ६७ ॥

तस्या विदार्याः प्रतिपादं पञ्चमो लघुः पूर्वेण वा लघुना परेण वा मिश्रो गुरुर्भवति प्रायः ।

ए[1] उपान्त्यः[2] ॥ ६८ ॥

प्राय इति वर्तते । तस्या विदार्याः प्रतिपादमन्त्यस्य समीपे प्राय एकारो (ते श्रीः क्वब्) भवति । अन्यत्रानियमः[3] ।

सायमुराभिरजधूसरया
मृदुमलयानिलक्षपितया ।
कामिजनो नवमालिकया
विगलित[4]मानमनाः क्रियते ॥

त्रयोविंशतिर्भङ्गुरासकम् ॥ ६९ ॥

भान्ता इति तु वर्तते । गुर्वन्तास्त्रयोविंशल्लघवो यथेष्टं मिश्रिता भवन्ति चेत् भङ्गुरासकं नाम भवति ।

द्वादशावलम्बनम् ॥ ७० ॥

द्वादशलघवः[5] प्रातिपादं भवन्ति चेदवलम्बनं नाम भवति ।

१. MSS. omits 'ए'
२. MSS 'न्त्या'.
३. MSS. 'अत्रानियमः'
४. MSS. 'यदीप विगलित'
५. MSS. omits द्वादश .........सोऽन्ते'

औऽन्ते ॥ ७१ ॥

तस्य प्रतिपादमन्ते प्रायो अकारो भवति ।

उभे रासकम् ॥ ७२ ॥

उभे भङ्गुरासकावलम्बने सहिते रासकमित्युच्यते ।

यथा —

कैया बाहुमूलत्रिकदेशनिवेशितानि
गूहसेऽद्य वसनेन किमङ्गनखक्षतानीति ।
लक्षमङ्गनालिङ्गनलग्नमनङ्गसाक्षिझषजन्मा
तव भरति तृतीयमिवेदमक्षिदशनदह्वचितेन ।
क्षतजलवारुणि तेन शोभितेन
वाधरेण त्वमसि विलासधरे ॥ (१)

गाथा ॥ ७३ ॥

गाथेदानीं वक्ष्यते ।

सार्षी ॥ ७४ ॥

सा च गाथा आर्षीति ज्ञेया । ऋषेरेवेयमित्यार्षी ।
पञ्चस्वनुष्टुबादिजगत्यन्तेषु सा गाथा भवति ।

पादैश्चतुर्भिष्षड्भिर्वा ॥ ७५ ॥

सा गाथा चतुर्भिर्वा षड्भिर्वा पादैः स्वजातीयैर्वा
विजातीयैर्वा भवति यथा —

१. The verse is very defective.

पश्यसि पश्यसि परदोषमात्मदोषं न पश्यसि ।
भर्तारमथ धनं च कुलं च हित्वा किं किं हसासि[1] ॥
दशधर्मं न जानान्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
त्वरमाणश्च भीतश्च कामी चोरश्च ते दश ॥

इति जानाश्रय्यां छन्दोविचित्यां
जात्यध्यायः पञ्चमः
समाप्तः ॥

---

१. 'हसति' क.

## अथ षष्ठोऽध्यायः ।

प्रस्तारः ॥ १ ॥

प्रस्तार इत्यधिकारः । इत उत्तरं वक्ष्यमाणः[1] प्रस्तार इति ज्ञेयः[2] ।

आद्ये भाः ॥ २ ॥

सर्वेषां छन्दसामाद्ये वृत्ते गुरव एव भवन्ति । एतदुक्तं भवति — सर्वेषां छन्दसामाद्यं वृत्तं सर्वगुर्विति ।

आदौ हा ॥ ३ ॥

सर्वगुरुवृत्तमाद्यं कृत्वा ततो द्वितीयस्य वृत्तस्य छेदने द्वितीयवृत्तादौ लघुरेकः कार्य इति ।

पूर्ववच्छेषम् ॥ ४ ॥

द्वितीयवृत्तादौ लघुमेकं कृत्वा ततोऽनन्तरमुपरिन्यस्तं पूर्ववृत्तमिव शेषं कुर्यात् । शेषमिति क्रियमाणवृत्तशेषम् । इदं प्रस्तारद्वितीयसूत्रयुक् सर्वेषां छन्दसां युग्वृत्तप्रस्तारे योज्यम् ।

१. 'यद्वक्ष्यमाणं' क.
२. 'ज्ञेयं' क.

भा हतुल्या ॥ ५ ॥

अथ तृतीयवृत्तस्य छेदने पूर्ववच्छेषं कृत्वा परिसमाप्ते द्वितीये वृत्तेऽथ तृतीयस्य छेदने तृतीयवृत्तादौ गुरुः द्वितीयवृत्तादिवत् तुल्यसंख्यः कार्य इति ।

ह ॥ ६ ॥

अथ तृतीयवृत्तादौ पूर्ववृत्तलघुसङ्ख्यं गुरुं कृत्वा तेषां गुरूणामनन्तरं ह इति लघुरेकः कार्य इति ।

शेषं पूर्ववत् ॥ ७ ॥

शेषामिति क्रियमाणवृत्तशेषमित्यर्थः । पूर्ववदिति अनन्तरमुपरिन्यस्तवृत्तसूत्रवादित्यर्थः । एतदुक्तं भवति — अनन्तरमतीतवृत्तलघुगुरुसङ्ख्यं लघुगुरुविन्यासं कुर्यादित्यर्थः । इदं तृतीयप्रस्तारसूत्रयुग्मं सर्वेषामयुग्वृत्तप्रस्तारे योज्यम् । आभ्यां प्रस्तारसूत्राभ्यां क्रमशो विवर्त्तमानाभ्यां सर्वेषां छन्दसां चतुर्थादिषु युगयुग्वृत्तेषु प्रस्तारविधिः कार्यः । आसर्वलघुवृत्तदर्शनादे सर्वेषां छन्दसां प्रस्ताराविधिः । अयमन्यः क्रमः —

भाहौ मिश्रावधोऽधः ॥ ८ ॥

दिदृक्षितस्य छन्दसो वृत्तानां प्रमाणसङ्ख्या लब्धा यावत्तावत्तौ गुरुलघू मिश्रौ एकान्तरितौ कार्यावधोऽधः ।

१. MSS. 'युक्तम्'
२. MSS. 'नेत्राभ्यां'

भौ ह्रौ[1] परे[2]तः ॥ ९ ॥

तेषां तथा न्यस्तानां परतो द्वौ गुरूलघू चाधोऽधो कार्यौ पूर्वमेकान्तरितन्यस्तगुरुलघुसङ्ख्याप्रमाणप्राप्तेरिति ।

तद्वद्धिः ॥ १० ॥

परत इत्यनुवर्तते । तथा न्यस्तानां च तेषां परतो द्विगुणं द्विगुणं गुरवो लघवश्चाधोऽधः कार्या आ-च्छन्दोऽक्षरप्रमाणपरिसमाप्तेरिति । उक्तमेवार्थं निरूपयि-ष्यामः — आद्या द्विगुणक्रिया चत्वारो गुरवश्च लघवश्च ततोऽष्टावेवं द्विगुणद्विगुणवृद्धिः सर्वेषां छन्दसामाछन्दो-ऽक्षरपरिसमाप्तेरिति ।

नष्टम् ॥ ११ ॥

नष्टमिदानीं वक्ष्यते ।

हृत्वा होऽर्धम् ॥ १२ ॥

यस्य कस्यचिच्छन्दसः सम्भवति दश सहस्रतमं वा दर्शयेत्युक्ते तेनोक्ता या सङ्ख्या तावन्ति रूपाणि विन्यस्य तदर्धमपनीय लघुमेकं न्यस्य पुनः पुनरेवं कार्यः ।

दत्वैकं समे भाः ॥ १३ ॥

अर्धे पुनर्ह्रियमाणे यदि विषमता स्यात् तत एवैकं दत्वा समतां कृत्वा ततोऽर्धमपनीय गुरुमेकं विन्यस्य पुनः

१. MSS. 'भौ'
२. MSS. 'परे'

पुनरेवं कार्यः । यावदुद्दिक्षितस्य छन्दसोऽक्षराणि परिपूर्णानि भवन्ति तावदेवं कृत्वा इदं तद्वृत्तमिति दर्शयेत् ।

उद्दिष्टम् ॥ १४ ॥

उद्दिष्टमिदानीं वक्ष्यते ।

द्विगुणं द्विगुणं वर्धयेत्प्रतिलोमतः ॥ १५ ॥

यस्य कस्यचिच्छन्दसो यत्किञ्चिद्वृत्तं विन्यस्येदं वृत्तं कतममित्युक्ते तस्य वृत्तस्यान्त्यादक्षरादारभ्य द्वे चत्वार्यष्टौ षोडश इति प्रतिलोमतो द्विगुणं द्विगणं वर्धयेत् ।

एकहानिर्भे ॥ १६ ॥

एवं प्रतिलोमतो वर्धयेता गुरौ वर्धिते एकेन हानिः कार्या । एवं कृत्वा यथालब्धसङ्ख्यावशाद्वक्तव्यमि ति अयमेकस्तूपदेशः । अत्र सर्वेषां छन्दसां वृत्तेषु विधिवत्प्रस्तरितेषु तत्राद्यमर्धं गुर्वन्तं भवति । अपरमर्धं लघ्वन्तम् । उद्दिष्टे तत्र लघ्वन्ते उत्तरार्धे वृत्तमिति ज्ञात्वा तस्योत्तरार्धवृत्तस्यान्त्याक्षरात् प्रभृति द्विगुणं वर्धयित्वा गुरौ वर्धिते पूर्ववदेकहानिं कृत्वा आच्छन्दोऽक्षरपरिसमाप्तेः + + + पूर्वार्धवृत्तानि च वक्तव्यानीति । अयं तृतीयस्य क्रमः ।

लघुपरीक्षा ॥ १७ ॥

लघुपरीक्षेदानीं वक्ष्यते ।

१. MSS. 'तद्वृत्तमिति'

२. 'तृतीयः प्रस्तारस्य क्रमः' क.

एकैकवृद्धमाच्छन्दसः ॥ १८ ॥

यस्य कस्यचिच्छन्दस एकलघुवृत्तानामन्येषां च प्रमाणं जिज्ञासमाने एकैकवृद्धान्यक्षरस्थानानि दिदृक्षितछन्दोऽक्षरप्रमाणानि क्रमान्न्यस्यानि । एवं विन्यस्य पूर्वं पूर्वं परयुतमविनाश्यान्त्यमपास्य पूर्वमक्षरस्थानं परेणाक्षरस्थानेन युक्तं कर्तव्यम् । अविनाश्यान्त्यमक्षरस्थानं पूर्वमेवापास्यान्यत्र न्यस्येत् । ततः पुनः पुनः पूर्वं परयुतं कृत्वान्यत्र न्यस्तस्य परतः परतो न्यसितव्यम् । अन्त्यमेकमवशिष्टं भवति । तच्च तेषां परतो न्यसितव्यम् । एवं विन्यस्य प्रथममक्षरस्थानमवेक्ष्य तदुपलब्धसङ्ख्यावशादेकलघुवृत्तानीयन्तीति वदेत् । एवं तृतीयादीनवेक्ष्य त्रिलघुवृत्तादीनि ब्रूयादिति ।

अयमन्यः क्रमः —

सबिन्द्वाद्यं ततो द्विर्द्विः[1] ॥ १९ ॥

सबिन्दु आद्यमक्षरस्थानं कुर्यात् । पश्चाद्द्विगुणद्विगुणितानि दिदृक्षितछन्दोक्षरप्रमाणानि कार्याणि । एवं कृत्वा एकलघुवृत्तादिदिदृक्षायां सत्यां —

तदधो रूपं नयेत् क्रमात्[2] । २० ॥

तेषां तथा न्यस्तानामक्षरस्थानानामधस्ताद्दिदृक्षित[3]लघुवृत्तप्रमाणानि रूपाणि विन्यस्य क्रमान्नयेत् । एकं द्वे

१ MSS. add 'सबिन्दुः'.
२. MSS add 'द्विवरत्'.
३. 'स्थानादधस्ताद्दिदृक्षित' ख. ग. पाठः.

त्रीणीति गणयन्नाद्यादारभ्यान्तादेवं नीत्वा यथालब्ध-सङ्ख्यावशादेकादिलघुवृत्तादीनि वक्तव्यान्येतावन्तीति । अनेन खेषु रूपेषु विन्यस्तेष्वन्त्यं यथावस्थितस्थानमेकैक-मिति द्वे इत्युक्तमक्षरस्थानं नयेदिति । तानि पुनर्वृत्तानीदं चेति जिज्ञासायां सत्यां युक्तिरूपाणि विन्यस्य—

सरूपं बिन्दुना वदेत् ॥ २१ ॥

सह रूपेण वर्तत इति सरूपम् । बिन्दुना सार्धं सरूपं विगणय्य यथालब्धसङ्ख्यावशादिदं चेदिदं चेति वक्तव्यम् । ते ते लघवस्तेषु कस्मिन् कस्मिन् स्थाने स्थिता इति चेत्—

स्थानानि तान्येव ॥ २२ ॥

तेषां लघूनां स्थानानि तान्येव भवन्ति । एतदुक्तं भवति— येषु येष्वक्षरस्थानेषु रूपाण्यवस्थितानि तान्येव स्थानानि वृत्तेषु लघूनामिति । इयमपरा लघुपरीक्षा उक्ता—एकादशस्य वृत्तस्य लघवः कियन्त इत्युक्ते पूर्ववदक्षरस्थानानि न्यस्य तावत् यावद्भिः सबिन्दुभिः स्थानैरबिन्दुना सह यावद्भिरक्षरस्थानैरेकादशसङ्ख्या परिपूर्णा भवति तावन्तस्तस्यैकादशस्य वृत्तस्य लघवो भवन्ति । एवं विशेषाणामपि विज्ञेयम् । अत्र तत्स्था नानि तान्येव भवन्ति ।

सङ्ख्या ॥ २३ ॥

सङ्ख्येदानीं वक्ष्यते । यस्य कस्यचिच्छन्दसः सम-

वृत्तसङ्ख्यादिदृक्षायां सत्यां तस्य पादाक्षराणि विन्यस्य ततः—

भार्धे हृते ॥ २४ ॥

विन्यस्तानां पादाक्षराणामर्धं हृत्वा गुरुन्यासः पुनः पुनरेव कार्यः । अर्धे पुनर्ह्रियमाणे यदि विषमता स्यात्—

होऽसमेऽपास्यैकम् ॥ २५ ॥

एकमपास्य पूर्वन्यस्तस्याधो लघुं न्यस्यैवं सर्वाण्यपनयेत् । एष सङ्ख्यागर्भः ।

भे द्विः ॥ २६ ॥

लघौ लघौ द्विः द्विः कुर्यात् तावता भे गुणयेदर्धस्येदित्यर्थः । उक्तमेवार्थं निरूपयिष्यामः । तद्यथा—चतुर्विंशत्यक्षरा गायत्री, तस्याः पादाक्षराणि षट् । तानि विन्यस्य ततस्तदर्धं हृत्वा गुरुं न्यस्य ततः त्रीण्यवशिष्टानि भवन्ति । तत्रासमतया अर्धं हर्तुं न शक्यते । तत एकमपास्य लघुं न्यस्येत् । अवशिष्टे द्वे भवतः । ततोऽर्धमपास्य गुरुं न्यस्येत् । एकमवशिष्टं तदप्यपनीय लघुं न्यस्येत् । अयं सङ्ख्यागर्भः । ततस्तु—

हे द्विः ॥ २७ ॥

इति परमेव लघू द्वे कुर्यात् । ततस्ते तूपरिस्थानगुरुमुपनीय द्वाभ्यामेव गुणयेत् । गुणिते चत्वार्यक्षराणि भवन्ति । तानि चत्वारि चोपरि लघुमुपनीय द्विः कुर्यात् ।

अष्टौ भवन्ति । तानि चाष्टौ शेषगुरुमुपनीयाष्टाभिरेव गुणयेत् । गुणिते च चतुष्षष्टिर्भवति । तद् गायत्र्याः समवृत्तसङ्ख्यापरिमाणम् । अयमेव विधिः सर्वेषां छन्दसाम् । इह गायत्र्याः समवृत्तसङ्ख्यां ज्ञात्वा तत्परस्योष्णिक्छन्दसः समवृत्तसङ्ख्याधिगमे विधिर्वक्ष्यते —

तद्द्विः परस्य ॥ २८ ॥

तानि गतानि गायत्र्याः समवृत्तानि भवन्ति । तानि द्विगुणीकृतान्युष्णिहः । तानि द्विगुणीकृतान्यनुष्टुभः । एवं सर्वेषामिति वेदितव्यम् ।

गायत्र्याः समवृत्तसङ्ख्यां ज्ञात्वा पुनरुक्तादीनां षण्णां छन्दसां समवृत्तानि सर्वाणि सहैव ज्ञातुमिच्छतामुपायं ब्रूमः —

द्यूनं तदन्तानाम् ॥ २९ ॥

तद्द्विरित्यनुवर्तते । तद् गायत्रीसमवृत्तसङ्ख्याप्रमाणं द्विगुणीकृतं च द्वाभ्यां हीनं तदन्तानां गायत्र्यन्तानां षण्णां समवृत्तसङ्ख्याप्रमाणं भवति । तत्तु षड्विंशत्यधिकशतम् । एवं विशेषाणामपि ज्ञेयम् । समवृत्ताधिगमे ब्रूमः —

[1]समवृत्तवर्गमूलोनोऽर्धसमः ॥ ३० ॥

[2]समतुल्येन गुणितो वर्ग इत्युच्यते । [3]गायत्र्याः सम[4]वर्गस्य [5]मूलोनश्चेदर्धसमवृत्ताधिकरणं भवति । समवर्गस्तु

१. MSS. 'समवृत्तो वर्गमूलो मार्धसमः'.
२. MSS. 'समतुल्येन'.
३. MSS. 'रागिणः'.
४. MSS. 'वर्गस्तस्य'.
५. MSS 'मूले गार्धद्'.

चत्वारि सहस्राणि षण्णवतिश्च । स तु मूलोनश्चत्वारि सहस्राणि द्वात्रिंशदधिकानि ।

उभयवर्गो विषमः ॥ ३१ ॥

मूलोन इति वर्त्तते । उभयेषां समानां वृत्तानां वर्गः स तु मूलोनः विषमवृत्तप्रमाणं भवति । उभयवर्गः कियानिति चेत् प्रतिलोमः —

एकं षट् सप्त सप्ताथ सप्त द्वे चैकमेव षट् ।
वर्गः समार्धसमयोर्गायत्र्या कथयेद् बुधः ॥

मूलन्तु चत्वारि सहस्राणि षण्णवतिश्च । तेन हीन उभयवर्गः —

एकं षट् सप्त सप्ताथ त्रीण्येकं द्वे च शून्यकम् ।
प्रमाणं विषमाणां तु गायत्र्या लक्षयेत् बुधः ॥

एवमन्येषां छन्दसां ज्ञेयम् ।

अध्वा ॥ ३२ ॥

अध्वा इदानीं वक्ष्यते ।

वृत्तं[1] द्विरेकोनम् ॥ ३३ ॥

वृत्तानि द्विगुणानि एकेन हीनानि अध्वप्रमाणं भवति सर्वेषां छन्दसाम् । तत्र गायत्र्या अध्वयोगं दर्शयिष्यामः । अस्याः सर्वाणि वृत्तानि द्विगुणीकृतानि —

त्रीणि त्रीण्यथ पञ्चापि पञ्च चत्वारि तत्त्वतः ।
चत्वारि त्रीणि चाप्येकं प्रमितान्यङ्गुलानि वै ॥

1. 'वृत्तिरेकोनम्' ख. ग.

अङ्गुलान्यष्टौ यवाः, द्वादशाङ्गुलानि वितस्तिः, वितस्ती द्वे हस्तः, हस्तौ द्वौ किष्कुः, द्वौ किष्कू धनुः, धनुःसहस्रे द्वे क्रोशः, चत्वारः क्रोशा योजनम्। तान्यङ्गुलानि हस्तस्य सङ्ख्यया त्रयोदशलक्षाणि अष्टनवतिसहस्राणि चैका सप्ताङ्गुलानि धनुःसंख्यया त्रीणि लक्षाणि चत्वार्ययुतानि नवसहस्राणि च पञ्चशतानि पञ्चविंशतिश्च विंशतिश्च हस्तश्चैकः। योजनसङ्ख्यया त्रयश्चत्वारिंशद्योजनार्धयोजनश्च धनुषां सहस्राणि पञ्चविंशत्यधिकानि पञ्चशतानि च सप्ताङ्गुलाधिको हस्तश्चैक इति।

स भा हा च येनाक्षरेभ्योऽधिका ॥ ३४ ॥

स खलु गुरुर्भवति। गङ्गा, कुरुते, विभाति, सातव, नचरति इत्यादिचतुष्काभ्यां गणाभ्यां षट्कसप्तकाष्टकैश्च मात्रासमूहैर्यथास्वमल्पभेदान्निष्पन्नानां वैतालीयादीनां जातिश्लोकानां लाघवे मात्रा येन प्रमाणेन यावताङ्गेनाक्षरेभ्योऽधिका भवतीति।

इति जानाश्रय्यां छन्दोविचित्यां
प्रक्रियाध्यायः षष्ठः ॥

---

समाप्तेयं छन्दोविचितिः ॥

---

१. 'अङ्गुलमष्टौ' ख. ग
२. 'भाहा च ङ' क.

॥ सूत्रानुक्रमणी ॥

| सूत्रम् | अ० | सू० | पृष्ठम् |
|---|---|---|---|
| वृत्ताज्ञी | ४ | ४४ | ४४ |
| वृत्तानि | २ | १ | १२ |
| वेगवती | ३ | ४ | २५ |
| वैताळीयं | ५ | २ | ७० |
| वैश्वदेवी | ४ | ५७ | ४८ |
| शक्वरी | ४ | ६७ | ५१ |
| शामिनी | ४ | ११ | ३२ |
| शार्दूलविक्रीडितं | ४ | ९३ | ५८ |
| शालिनी | ४ | ३९ | ४२ |
| शिखरिणी | ४ | ८६ | ५६ |
| शिखा णणनरु | ३ | १४ | २८ |
| शिखार्धे भाः | ५ | २४ | ७९ |
| शीर्षकम् | ५ | ५७ | ८९ |
| शुद्धविराट् | ४ | २७ | ३५ |
| शेषं पूर्ववत् | ६ | ७ | ९८ |
| शेषाः प्रचिताः | ४ | १२० | ६८ |
| श्येनी | ४ | ४५ | ४४ |
| श्वृद्ध्याणवार्ण० | ४ | ११९ | ६७ |
| षडधिकाक्षरा | ५ | ५२ | ८८ |
| षष्ठो हः | ५ | ३३ | ८३ |
| संयोगायोगवाह० | १ | १२ | ५ |
| सङ्कता | ४ | ४६ | ४४ |
| सङ्कृतिः | ४ | १०६ | ६२ |
| सङ्ख्या | ६ | २३ | १०२ |
| सप्तमपूर्वान्त्ये | ५ | ३१ | ८२ |
| सप्तार्धे | ५ | २७ | ८१ |

| सूत्रम् | अ० | सू० | पृष्ठम् |
|---|---|---|---|
| सबिन्द्वार्धं | ६ | १९ | १०१ |
| स भा हा च | ६ | ३४ | १०६ |
| समवृत्तवर्ग० | ६ | ३० | १०४ |
| समानि | ४ | १ | ३० |
| सरूपं बिन्दुना | ६ | २१ | १०२ |
| सर्वत्र सैतवस्य | २ | २७ | २२ |
| सा चतुर्दशभेदा | ४ | ३७ | ३८ |
| सा चोपचित्रा | ५ | २१ | ७८ |
| सातवत् | १ | ३१ | ८ |
| सा पादान्ते | १ | ४१ | १० |
| सार्षी | ५ | ७४ | ९५ |
| साशीः | ४ | ५ | ३१ |
| सिंहोन्नता | ४ | ७३ | ५३ |
| सुप्रतिष्ठा | ४ | १० | ३२ |
| सुवदना | ४ | ९६ | ५९ |
| सु वान्त्यम् | ५ | १६ | ७६ |
| सोऽङ्कुलेऽङ्कुले | १ | १७ | ७ |
| सोपानं | ४ | १६ | ३३ |
| सौदामिनी | ४ | ४० | ४९ |
| स्गूर्णूश्री | ४ | ११५ | ६५ |
| स्थानानि | ६ | २२ | १०२ |
| स्रग्धरा | ४ | ९९ | ६० |
| सै शुद्धविराड्० | २ | १४ | १७ |
| स्वराड्भुरिजावधिके | १ | ७ | ३ |
| स्वरैः सनैः | १ | ४३ | १० |
| स्वरोऽक्षरम् | १ | १० | ४ |

# श्लोकानुक्रमणी ।